# महिषासुरमर्दिनी-स्तोत्रम्

# MAHISHASURAMARDINI-STOTRAM

व्याख्याता :-

द्वादशदर्शनकाननकेसरी आचार्यः स्वामी काशिकानन्दगिरिजी महाराजः, महामण्डलेश्वरः

Commentator :-

Dvadashadarshanakananakesari Acharya Swami Kashikanandagiriji Maharaj, Mahamandleswar.

आँग्लभाषानुवादकर्त्री :-

डॉ. उषा भिसे,

Translation into English by :-

Dr. Usha Bhise,

भारती-संस्कृत-विद्या-निकेतनम्

Bharati-Samskrta-Vidya-Niketanam

प्रकाशकः :-

भारती-संस्कृत-विद्या-निकेतनम् - ऑगस्ट १९९१.

Publisher:-

Bharati-Samskrta-Vidya-Niketanam - August 1991.

प्राप्तिस्थानम् :-

१) भारती-संस्कृत-विद्या-निकेतनम्

१२,शङ्कर-कुञ्जः, गोविन्द-नगरम्, घाटकोपर,मुम्बापुरी-४०००८४

२) आनन्दवन-आश्रम, ४१६-अ, स्वामी विवेकानन्द मार्गः,

कान्दिवली, मुम्बापुरी-४०००६७.

३) पुस्तक भारती

भारतीय विद्या भवन बिल्डिंग, क. मु. मार्ग, बम्बई ४००००७.

Available at:-

(1) Bharati-Samskrta-Vidya-Niketanam

12, Shankar Kunj, Govind Nagar, Ghatkopar,

Bombay-400084.

(2) Ananda-van Ashram

416-A,S. V. Road,Kandivli, Bombay-400067.

(3) Pustak Bharati

Bharatiya Vidya Bhavan Building,K.M.Marg,

Bombay-400007.

ॐ

## आमुखम्

प्रतिवर्षं भारती-संस्कृत-विद्या-निकेतनं कस्मिंश्चिद् रम्ये शान्ते च स्थले संस्कृतानुरागिणां कृते संस्कृतसप्ताहम् आयोजयति । सप्ताहस्य कार्यक्रमे महामण्डलेश्वर- श्रीकाशिकानन्द-स्वामिपादानां प्रवचनानि प्रामुख्येन सम्पन्नानि भवन्ति । प्रातः एकस्याम् उपनिषदि अपराह्णे च एकस्मिन् स्तोत्रे एतानि प्रवचनानि सम्पद्यन्ते । प्रवचनश्रवणेन श्रोतृवर्गः एवं प्रभावितः भवति यत् पुनः पुनः श्रोतुं मनीषा प्रवर्तते । देवलालिनगरे प्रवर्तिते शिबिरे प्रथिते महिषासुरमर्दिनीस्तोत्रे स्वामिचरणानां यानि प्रवचनानि व्यतीतानि तेषां साररूपम् इदं पुस्तकं प्रकाशतां नीयते । देववाण्यां स्वामिवर्याणां स्तोत्रभाष्यं, राष्ट्रभाषायां स्वामिवर्यकृतः अनुवादः आङ्ग्लभाषायां च मत्कृतः अनुवादः इति भाषात्रयसंवलितं, प्रतिदिनं पठनाय योग्यम् इदं मधुरं स्तोत्रं निकेतनस्य प्रथमं प्रकाशनपुष्पम् इति संस्कृतजगति स्वागतार्हं भवतु । इदं मुद्रितं स्तोत्रम् अक्षरशृङ्खलायां बद्धं साक्षात् प्रवचनमिव माधुर्यं न वहति तथापि मनोज्ञदृश्यस्य यथा छायाचित्रणं तथा स्तोत्रार्थं ज्ञातुं प्रस्थितस्य वाचकस्य क्षुधां शमयितुम् अलम् इति विश्वसिमः । सङ्गणकमाध्यमेन एतत्प्रकाशनं सुकरं शीघ्रं च सञ्जातम् इति धन्याः वयम् ।

डॉ. उषा भिसे

१ ऑगस्ट १९९१. (अध्यक्षा, भारती-संस्कृत-विद्या-निकेतनम्)

# महिषासुरमर्दिनी-स्तोत्रम्

अयि गिरिनन्दिनि नन्दितमेदिनि विश्वविनोदिनि नन्दनुते
गिरिवर-विन्ध्य-शिरोऽधिनिवासिनि विष्णुविलासिनि जिष्णुनुते ।
भगवति हे शितिकण्ठकुटुम्बिनि भूरिकुटुम्बिनि भूरिकृते
जय जय हे महिषासुरमर्दिनि रम्यकपर्दिनि शैलसुते ।।१।।

सुरवरवर्षिणि दुर्धरधर्षिणि दुर्मुखमर्षिणि हर्षरते
त्रिभुवनपोषिणि शङ्करतोषिणि कल्मषमोषिणि घोषरते ।
दनुजनिरोषिणि दितिसुतरोषिणि दुर्मदशोषिणि सिन्धुसुते
जय जय हे महिषासुरमर्दिनि रम्यकपर्दिनि शैलसुते ।।२।।

अयि जगदम्ब मदम्ब कदम्बवन-प्रियवासिनि हासरते
शिखरिशिरोमणि-तुङ्गहिमालय-शृङ्गनिजालय-मध्यगते ।
मधुमधुरे मधुकैटभगञ्जिनि कैटभभञ्जिनि रासरते
जय जय हे महिषासुरमर्दिनि रम्यकपर्दिनि शैलसुते ।।३।।

अयि शतखण्ड-विखण्डित-रुण्ड-वितुण्डित-शुण्ड-गजाधिपते
रिपु-गज-गण्ड-विदारण-चण्डपराक्रम-शौण्ड-मृगाधिपते ।
निज-भुजदण्ड-निपातित-चण्ड-निपाटित-मुण्ड-भटाधिपते
जय जय हे महिषासुरमर्दिनि रम्यकपर्दिनि शैलसुते ॥४॥

अयि रणदुर्मद-शत्रु-वधोदित-दुर्धर-निर्जर-शक्ति-भृते
चतुर-विचार-धुरीण-महाशय-दूत-कृत-प्रमथाधिपते ।
दुरित-दुरीह-दुराशय-दुर्मति-दानव-दूत-कृतान्तमते
जय जय हे महिषासुरमर्दिनि रम्यकपर्दिनि शैलसुते ॥५॥

अयि निजहुंकृतिमात्र-निराकृत-धूम्रविलोचन-धूम्रशते
समर-विशोषित-शोणितबीज-समुद्भवशोणित-बीज-लते ।
शिव-शिव-शुम्भनिशुम्भमहाहव-तर्पित-भूतपिशाचपते
जय जय हे महिषासुरमर्दिनि रम्यकपर्दिनि शैलसुते ॥६॥

धनुरनुसङ्गरण-क्षण-सङ्ग-परिस्फुरदङ्ग-नटत्कटके
कनक-पिशङ्ग-पृषत्क-निषङ्ग-रसद्भट-शृङ्ग-हतावटुके ।
कृत-चतुरङ्ग-बलक्षिति-रङ्ग-घटद्-बहुरङ्ग-रटद्-बटुके
जय जय हे महिषासुरमर्दिनि रम्यकपर्दिनि शैलसुते ॥७॥

अयि शरणागत-वैरिवधू-वरवीरवराभय-दायिकरे
त्रिभुवन-मस्तकशूल-विरोधि-शिरोधि-कृताऽमल-शूल-करे ।
दुमिदुमितामरदुन्दुभि-नाद-महो-मुखरीकृत-दिङ्निकरे
जय जय हे महिषासुरमर्दिनि रम्यकपर्दिनि शैलसुते ॥८॥

सुरललना-ततथेयि- तथेयि-कृताभिनयोदर-नृत्य-रते
कृत-कुकुथःकुकुथो-गडदादिकताल-कुतूहल-गान-रते ।
धुधुकुट-धुक्कुट-धिन्धिमित-ध्वनि-धीर-मृदङ्ग-निनाद-रते
जय जय हे महिषासुरमर्दिनि रम्यकपर्दिनि शैलसुते ॥९॥

जय- जय- जप्यजये जय- शब्द-पर-स्तुति-तत्पर-विश्व-नुते
झण- झण-झिञ्झिमि- झिङ्कृत-नूपुर- शिञ्जित-मोहित- भूतपते ।
नटित-नटार्ध-नटी-नट-नायक-नाटकनाटित-नाट्यरते
जय जय हे महिषासुरमर्दिनि रम्यकपर्दिनि शैलसुते ।।१०।।

अयि सुमनःसुमनःसुमनःसुमनःसुमनोहरकान्तियुते
श्रितरजनीरज-नीरज-नीरजनी-रजनीकर-वक्त्रयुते ।
सुनयनविभ्रम-रभ्र-मर-भ्रमर-भ्रम-रभ्रमराधिपते
जय जय हे महिषासुरमर्दिनि रम्यकपर्दिनि शैलसुते ।।११।।

महित-महाहव-मल्लमतल्लिक-मल्लित-रल्लक-मल्ल-रते
विरचित-वल्लिक-पल्लिक-मल्लिक-झिल्लिक-भिल्लिक-वर्ग-वृते ।
सित-कृतफुल्ल-समुल्लसिताऽरुण-तल्लज-पल्लव-सल्ललिते
जय जय हे महिषासुरमर्दिनि रम्यकपर्दिनि शैलसुते ।।१२।।

अविरल-गण्डगलन् -मद-मेदुर-मत्त-मतङ्गजराज-पते
त्रिभुवन-भूषणभूत-कलानिधिरूप-पयोनिधिराजसुते ।
अयि सुदतीजन-लालस-मानस-मोहन-मन्मथराज-सुते
जय जय हे महिषासुरमर्दिनि रम्यकपर्दिनि शैलसुते ॥१३॥

कमलदलामल-कोमल-कान्ति-कलाकलिताऽमल-भालतले
सकल-विलासकला-निलय-क्रम-केलि-चलत्-कलहंसकुले ।
अलिकुल-सङ्कुल-कुवलयमण्डल-मौलिमिलद्बकुलाऽऽलिकुले
जय जय हे महिषासुरमर्दिनि रम्यकपर्दिनि शैलसुते ॥१४॥

कर-मुरली-रव-वीजित-कूजित-लज्जित-कोकिल-मञ्जुरुते
मिलित-मिलिन्द-मनोहर-गुञ्जित-रञ्जित-शैलनिकुञ्ज-गते ।
निजगुणभूत-महाशबरीगण-सद्गुण-सम्भृत-केलितते
जय जय हे महिषासुरमर्दिनि रम्यकपर्दिनि शैलसुते ॥१५॥

कटितट-पीत-दुकूल-विचित्र-मयूख-तिरस्कृत-चन्द्ररुचे
प्रणत-सुरासुर-मौलि-मणिस्फुरदंशु-लसन्-नखचन्द्र-रुचे ।
जित-कनकाचलमौलि-मदोर्जित-निर्जरकुञ्जर-कुम्भ-कुचे
जय जय हे महिषासुरमर्दिनि रम्यकपर्दिनि शैलसुते ॥१६॥

विजित-सहस्रकरैक-सहस्रकरैक-सहस्रकरैकनुते
कृत-सुरतारक-सङ्गर-तारक सङ्गर-तारकसूनु-सुते ।
सुरथ-समाधि-समान-समाधि-समाधि-समाधि-सुजात-रते
जय जय हे महिषासुरमर्दिनि रम्यकपर्दिनि शैलसुते ॥१७॥

पदकमलं करुणानिलये वरिवस्यति योऽनुदिनं नु शिवे
अयि कमले कमलानिलये कमलानिलयः स कथं न भवेत् ।
तव पदमेव परम्पदमित्यनुशीलयतो मम किं न शिवे
जय जय हे महिषासुरमर्दिनि रम्यकपर्दिनि शैलसुते ॥१८॥

कनकलसत्कल-सिन्धुजलैरनुषिञ्चति ते गुणरङ्गभुवं
भजति स किं न शचीकुचकुम्भ-तटीपरिरम्भ-सुखानुभवम् ।
तवचरणं शरणं करवाणि नतामरवाणि निवासि शिवं
जय जय हे महिषासुरमर्दिनि रम्यकपर्दिनि शैलसुते ।।१९।।

तव-विमलेऽन्दुकलं वदनेन्दुमलं सकलं ननु कूलयते
किमु पुरुहूतपुरीन्दुमुखी-सुमुखीभिरसौ विमुखीक्रियते ।
मम तु मतं शिवनामधने भवतीकृपया किमुत क्रियते
जय जय हे महिषासुरमर्दिनि रम्यकपर्दिनि शैलसुते ।।२०।।

अयि मयि दीनदयालुतया करुणापरया भवितव्यमुमे
अयि जगतो जननी कृपयासि यथासि तथाऽनुमितासि रमे ।
यदुचितमत्र भवत्युररीकुरुतादुरुतापमपाकुरु मे
जय जय हे महिषासुरमर्दिनि रम्यकपर्दिनि शैलसुते ।।२१।।

# महिषासुरमर्दिनी-स्तोत्रम्

अयि गिरिनन्दिनि नन्दितमेदिनि विश्वविनोदिनि नन्दनुते
गिरिवर-विन्ध्य-शिरोऽधिनिवासिनि विष्णुविलासिनि जिष्णुनुते
भगवति हे शितिकण्ठकुटुम्बिनि भूरिकुटुम्बिनि भूरिकृते
जय जय हे महिषासुरमर्दिनि रम्यकपर्दिनि शैलसुते ।।१।।

वन्दे भगवतीमम्बां महिषासुरमर्दिनीम् ।
व्याख्यास्येऽथातिसंक्षेपात्तत्पुष्पाञ्जलिमादरात् ।।

सकलपुरुषार्थदायिनीं देवीं भगवतीमभिष्टुवन् कश्चित् कविः प्रथमं तस्याः स्वरुपं सामान्यतः कार्यं चाह -
अयि गिरिनन्दिनि० -अयीति सानुनये सम्बोधने । गिरेर्हिमालयस्य पर्वतस्य नन्दिनी पुत्री पार्वती तत्सम्बुद्धौ हे गिरिनन्दिनि । एवमुत्तरत्र सर्वत्र सम्बुद्ध्यन्तं बोध्यम् । गिरीन् पर्वतान् स्वशक्त्याधानेन नन्दयति तच्छीला तथा, यैः क्ष्माभृद्भिर्मेदिनी नन्दिता भवतीति वा । गिरीन् पूज्यान् नन्दयतीति वा । नन्दिता मेदिनी यया सा तथा । मेदिनीनन्दनेनैव विश्वविनोदिनी मेदिनीजातमानवकृतकर्मादि-नन्दनीयत्वाद् विश्वस्य । कथमेषा विश्वं विनोदयामासेत्येतद् उदाहरणेनाह नन्दनुत इति । नन्दगेहे किल जातैषा यद्यपि प्रथमं न

ज्ञाता तथापि पश्चान्- नारदेन श्रीकृष्णादेः स्वरूपकथनोत्तरं मदीया पुत्री साक्षाद् भगवती जातेति सा नन्देन सभक्ति स्तुता । गिरिवरेति -गिरिवरस्य विन्ध्यस्य शिरसि शिखरेऽधिनिवस्तुं शीलं यस्याः । "नन्द गोपगृहे जाता यशोदागर्भसम्भवा । ततस्तौ नाशयिष्यामि विन्ध्याचलनिवासिनी" इति वचनात् । सैषा नन्दगृहे जाता सती विष्णुं श्रीकृष्णरूपेणावतीर्णं, विलासयामास योगमायामाश्रित्यैव श्रीकृष्णेन बहुतरलीलाकरणात् । जिष्णुनुते -"मायामयोऽयं गुणसंप्रवाह" इत्येवमिन्द्रेण श्रीकृष्णस्तुतिप्रसङ्गे गोवर्धनोद्धारे स्तुता । इन्द्रादिस्तुतेरेव तारकासुरवधाय पर्वतपुत्रीरूपेण भगवत्या अवतरणाच्च। जिष्णुरिति अर्जुननामाऽपि । भगवति ऐश्वर्यधर्मयशः श्रीज्ञानवैराग्यलक्षणषाड्गुण्यपूर्णे। शितिकण्ठकुटुम्बिनि- शिवपत्नि । भूरिकुटुम्बिनि-"भूरिर्ना वासुदेवे च हरे च परमेष्ठिनि" इति मेदिनी। आवृत्त्या ब्रह्म-विष्णु-महेश्वराणां कुटुम्बिनी सरस्वत्यादि त्रिस्वरूपा। एवंस्थिते शितिकण्ठकुटुम्बिनीति विशेषार्थम् । भूतकृते इति क्वचित्पाठः । भूतानि कृतानि यया सा तथा। भूरिकृत इति पाठेऽपि तथार्थः । भूरिभिर्ब्रह्मविष्णुमहेश्वरैर्भूरिभिर्बहुभिरिन्द्रादिभिश्च कृता तत्तेजःपुञ्जसमुद्भवादिति वा । दृश्यते च समुदाये शक्तिप्राकट्यम् । एवंभूते हे महिषासुरमर्दिनि रम्याः कपर्दा जटाजूटाः यस्याः सा तथा हे शैलसुते जय जय सुष्ठूत्कर्षेण वर्तस्व । महिषासुरमर्दिनीं महालक्ष्मीरूपां मध्यमचरित्रविषयभूतां मध्यशरीरवन्मुख्यत्वेन

प्रथममुपादाय ततो वाम-दक्ष-करस्थानीये महाकाली-महासरस्वत्यौ प्रथमोत्तमचरित्रस्थे विशेषणाभ्यां गृहीते । श्यामकपर्दसमावृता महाकाली । शैलसुता उमा ब्रह्मविद्यास्वरुपिणी केनोपनिषदि दर्शिता महासरस्वती । महिषोऽधर्मप्रतीकरूपस्ताद्दशासुरमर्दिनी परा परमोपास्या ।।१।।

*हे माता ! रमणीय केशपाश से शोभायमान हे शैलपुत्री ! हे महिषासुर मर्दिनी भगवती ! तुम्हारी जय हो । तुम हिमालयनन्दिनी हो, पृथ्वी की समृद्धि विधायिनी हो, विश्व के लिये आनन्ददायिनी हो । पूर्वकृत नन्दरायकी स्तुति से प्रसन्न होकर तुम ने नन्दगृह में जनम लिया। और विन्ध्यवासिनी देवी बनी । दूसरी और भगवान विष्णु (श्रीकृष्ण) के रासविलास में सहभागिनी बनी (योगमायामुपाश्रितः) इन्द्रादि भी तुम्हारी स्तुति करने लगे । हे भगवती! तुम शङ्कर की अर्धाङ्गिनी हो । लक्ष्मी आदि के रुप में विष्णु आदि की भी कुटुम्बिनी हो । अनन्त विश्व की जन्मदात्री हो ।।१।।*

Hail, Oh daughter of Mountain, who has caused joy to the Universe, praised by Nanada, residing on the peak of the superb mountain Vindhya, making Vishnu manifest his sports, praised by Indra, Oh Blessed one, consort of

Siva (in particular), consort of many (Brahma, Vishnu and Siva), maker of many (beings) who has crushed the demon, Mahisha, wearing a charming knot of hair, Oh Daughter of Mountain (Himalaya), Victory to you, Victory to you. (1)

भूरिकरणमुक्त्वा भूरिरक्षणमाह -

सुरवरवर्षिणि दुर्धरधर्षिणि दुर्मुखमर्षिणि हर्षरते
त्रिभुवनपोषिणि शङ्करतोषिणि कल्मषमोषिणि घोषरते ।
दनुजनिरोषिणि दितिसुतरोषिणि दुर्मदशोषिणि सिन्धुसुते
जय जय हे महिषासुरमर्दिनि रम्यकपर्दिनिं शैलसुते ।।२।।

सुरवरेति ०-सुरेभ्यो वरान् वर्षति तच्छीला तथा । "व्रियतां त्रिदशाः सर्वे यदस्मत्तोऽभिवाञ्छितम् " इत्युक्तेः । अत एव दुर्धरनामानं महिषसेनापतिं धर्षयति तथा । दुर्मुखनामानं मर्षयति नाशयतीति तथा । दुर्धरान्दुर्मुखांश्च दुष्टान् हन्तीति वा । हर्षे स्वीये परकीये च रते । देवरक्षणासुरनिकन्दनाभ्यां त्रिभुवनपोषणशीले, मङ्गलवितानेन शङ्करतोषणशीले, स्वसेविनां कल्मषहरणशीले । घोषे शत्रुवधकालीनगर्जने वेदघोषादौ वा रते । दनुजनीनां दानवानां रोषिणि । रुषिर्हिंसार्थः । दितिकुलानां दैत्यानां रोषिणि । दुर्मदानां शोषिणि,

शोषिणि, सिन्धुसुते लक्ष्मीस्वरूपे समुद्रपुत्रि । जय जयेति । ।।२।।

जय हो महिषासुर मर्दिनी ! जय हो रमणीय केशपाश से शोभायमान शैलपुत्री ! तुम देवताओं पर वरों की वर्षा करती हो । प्रथम तुम ने महिषासुर के सेनानी दुर्धर को पछाडा, दुर्मुख को गिराया । इस प्रथम विजय से ही हर्षित हो गयी । असुर संहार से त्रिभुवन का पोषण करने के लिये संन्नद्ध हो गयी । हे माता ! तुम सदा शंकर को प्रसन्न रखती हो, भक्तों के पापों को धो डालती हो । दानवों का संहार दैत्यो का विनाश एवं मदान्ध दुष्टों का सफाया करती हो। हे जगदम्बा तुम वेदधोष में तन्मय हो जाती हो ।।२।।

Oh Goddess, who showers boons on gods, molests demon Durdhara, destroys demon Durmukha, is gladdened by the joy (of herself and others), nourishes the three worlds, satisfies Sankara, removes the guilt (of devotees), is delighted in the war-cries, causes harm to the Danavas, gets angry with the sons of Diti (i.e. Demons), causes affliction to the arrogant, Oh daughter of the ocean (as Lakshmi) who has crushed the demon, Mahisha,

wearing a charming knot of hair, Oh Daughter of Mountain (Himalaya), Victory to you, Victory to you.(2)

प्रथमचरित्रार्थदर्शनपूर्वकं ध्येयस्वरूपमाह -

अयि जगदम्ब मदम्ब कदम्बवन-प्रियवासिनि हासरते
शिखरिशिरोमणि-तुङ्गहिमालय-शृङ्गनिजालय-मध्यगते ।
मधुमधुरे मधुकैटभगञ्जिनि कैटभभञ्जिनि रासरते
जय जय हे महिषासुरमर्दिनि रम्यकपर्दिनि शैलसुते ॥३॥

अयि जगदम्बेति। जगतामम्ब, विशेषतश्च मदम्ब, कदम्बवने प्रियं यथा स्यात् तथा वस्तुं शीलं यस्याः सा तथा। कदम्बवनं प्रियवासः वासस्थानं अस्या अस्ति तथेति वा। हासरते " जहासारुणलोचना" इत्युक्तेः। शिखरिणां पर्वतानां शिरोमणिर्यस्तुङ्गो हिमालयस्तस्य शृङ्गमेव शृङ्गस्थो वा यो निजालयस्तन्मध्यगते तन्मध्यवासिनि। मधुवत् पुष्परसंवद् वसन्तवद् वा मधुरे सरसे। मधौ विष्णौ मधुरे इति वा। मधुसूदननामैकदेशत्वाद् मधुर्विष्णुर्मधुवंशीयत्वाद् वा। मधुकैटभगञ्जिनि। मधुकैटभावसुरौ गञ्जयतीति तथा। "गञ्जः स्यात्पुंसि रीढायां भाण्डागारे तु न स्त्रियाम् "इति मेदिनी। रीढा तिरस्कारस्तां करोतीति णिच्। तत्करोति तदाचष्टे

। तयोःहन्ता तु विष्णुरेव। कैटभभञ्जिनीति ससम्यन्तम्। विश्वम्भरः कैटभजिदित्यमराद् विष्णुः श्रीकृष्णः तस्मिन् रासकारिणि रासरते। कैटभभञ्जिनीति सम्बोधनं सम्बोधनमध्यगतत्वाद् यद्यप्युचितं तथापि पुनरुक्तिमात्रं स्यादित्युपेक्षितम्। जय जयेति। ।।३।।

हे जगदम्बा! ओ मेरी माँ! कदम्बवन में निवास करना तुम्हें बहुत प्रिय लगता है । तुम हास्य विलास में प्रीति रखती हो । तुम ने पर्वतों के शिरोमणि हिमालय के उत्तुंग शिखर को अपना निवास स्थान बनाया । तुम्हारा स्वरुप मन वाणी आदि सभी मधु के समान मधुर मनोहर है। मधु और कैटभ को तुम ने प्रथम ही हताहत किया। कैटभासुर के हन्ता विष्णु (श्रीकृष्ण) की रासलीला में तुम ने ही रुचि के साथ पृष्ट भूमिका निभायी । हे महिषासुर मर्दिनी, रमणीय केशपाशधारिणी शैलपुत्री तुम्हारी जय हो जय हो ।।३।।

Hail, Oh Mother of the World (and) of me (in particular) dweller in the forest of Kadamba trees which are dear, delighted in the roar of laughter, dwelling in the interior of one's own house in the peak of lofty Himalaya - the crest-jewel of mountains, sweet like honey, hater of (the demons) Madhu and Kaitabha,

taking delight in the Rasakrida of Vishnu, the destroyer of Kaitabha, who has crushed the demon, Mahisha, wearing charming knot of hair, Oh Daughter Mountain (Himalaya), Victory to you, Victory to you. (3)

द्वितीयचरित्रमादायाहार्धेन -

अयि शतखण्ड-विखण्डित-रुण्ड-वितुण्डित-शुण्ड-गजाधिपते
रिपु-गज-गण्ड-विदारण-चण्डपराक्रम-शौण्ड-मृगाधिपते ।
निज-भुजदण्ड-निपातित-चण्ड-निपाटित-मुण्ड-भटाधिपते
जय जय हे महिषासुरमर्दिनि रम्यकपर्दिनि शैलसुते ॥४॥

अयि शतेति । शतानि खण्डानि यथा स्युः तथा विखण्डिता रुण्डा अश्वविशेषा यया सा । "मूकरुण्डौ तु वेसरादश्वा सूते" इति यादवः । वेसरो वेगतरोऽश्वः । "स्याद् वेसरो वेगतर" इति तत्रैव पाठात् । सा च सा वितुण्डिताः तोडिताः शुण्डाः करिहस्ता येषां ते तथाभूता गजाधिपतयो यया सा तथेति कर्मधारयः । रिप्विति । रिपूणां ये गजाः तेषां, यद् वा गजरूपेणागतमहिषासुरस्य एवं गण्डविदारणे चण्डपराक्रमेण शौण्डो विख्यातः । "शौण्डो मते च विख्याते" इति विश्वमेदिन्यौ । एवंविधो मृगाधिपतिर्वाहनत्वेन यस्याः सा तथा ।

तृतीयचरित्रार्थैकदेवमादायाह - निजभुजेति । निजभुजेन निपातितश्चण्डो नाम राक्षसो यया सा च सा विपातितो मुण्डनामा भटाधिपतिः यया सा तथा । जय जयेति । ।।४।।

जय हो जय हो माता ! महिषासुर मर्दिनी ! जय हो रम्यकेश विन्यास से शोभायमान शैलपुत्री ! तुम ने युद्ध में तेज दौडते हुए घोडों को सौ सौ टुकडे कर मार गिराया । बडे बडे हाथियों के सूडों को हजारो टुकडे कर फेंक दिया । तुम्हारा वाहन सिंह भी हाथियों के गण्डस्थल फाड डालने के पराक्रम से प्रख्यात हुआ । तुम ने अपनी भुजाओं से सेनाधिपति चण्ड और मुण्ड नाम के प्रखर योद्धाओं को मार गिराया ।।४।।

Hail, Oh Gosddess who has shattered the best horses into hundreds of pieces (and) rendered the masters of elephants as having the trunks (of the elephants) chopped off, possessed of the lord of animals (lion) well-known for the fierce valour displayed in breaking the foreheads of enemies' elephants, who with her staff-like arms knocked down demon Chanda and caused the fall of demon Munda who has crushed

the demon, Mahisha, wearing a charming knot of hair, Oh Daughter of Mountain (Himalaya), Victory to you, Victory to you.(4)

तृतीयचरित्रार्थं श्लोकैर्दर्शयति तत्र दौत्यमाह -

अयि रणदुर्मद-शत्रु-वधोदित-दुर्धर-निर्जर-शक्ति-भृते
चतुर-विचार-धुरीण-महाशय-दूत-कृत-प्रमथाधिपते ।
दुरित-दुरीह-दुराशय-दुर्मति-दानव-दूत-कृतान्तमते
जय जय हे महिषासुरमर्दिनि रम्यकपर्दिनि शैलसुते ।।५।।

अयि रणेति । रणदुर्मदानां शत्रूणां वधार्थम् उदिता उद्भूता या दुर्धराः निर्जरस्सां शक्तयो ब्राह्मी माहेश्वर्यादयः ताभिर्भृते, पालिते, पूरिते वा । चतुरेति । चतुरश्चासौ विचारे धुरीणश्च चातुर्ययुक्तविचारे धुरीण इति वा । स चासौ महाशयश्च एवंविधगुणगणविशिष्टेन दूतेन भवितव्यमिति तादृशदूते कृतं पर्यासः प्रमथाधिपतिः शिवो यस्याः सा तथा । "युगपर्यासयोः कृतम्" इत्यपरः । दूतपदान्तं तादृशदूतकर्मणि तादृशदूतभवने वा लाक्षणिकं बोध्यम् । केचिन्- मध्ये महाशिवेति पठन्ति। अन्ये महाशयेति पठित्वापि तस्य प्रमथाधिपतिना सामानाधिकरण्येन योजयन्ति। तदुभयं दुर्घटसमासत्वादुपेक्षितम्। दुरितेति। दुरितश्च दुरीहश्च दुराशयश्च दुर्मतिश्च यः परपक्षीयदूतः

सुग्रीवनामा तेन कृता अन्तमतिर्यस्याः सा। सुग्रीवोक्त्या असुराणाम् अन्त एव कर्तव्य इति मतिर्देव्या निश्चिता जातेति। जय जयेति। ।।५।।

केशों के सुन्दर गुच्छों से शोभायमान हे शैलसूनु ! हे महिषासुर मर्दिनी माता तुम्हारी जय हो । रण में मदोन्मत्त शत्रुओं का वध करने के लिये प्रगट हुई शक्ती माहेश्वरी आदि शक्तियां चारों ओर से तुम्हें सम्हाले हुए थी । तुम ने अति चतुर विचारशील, महामना, गणाधिपति शिवजी को अपना दूत बनाकर अपना शान्तिसन्देश भेजा था । किन्तु दुष्ट एवं दुर्मीति दानव दूत (सुग्रीव) के द्वारा उसे ठुकरा देने से तुम ने दानवों का अन्त करने का फैसला किया था ।।५।।

Hail, Oh Goddess, supported by the powers of undefeated gods which arose for the death of enemies who were ferocious in the battle, having Siva, the foremost dignitary of ingenious thoughts, as an efficient messenger, who made up her mind to put an end to demon-rule because of the messenger (Sugriva) of demons having evil behaviour, evil wishes, evil mind and wicked disposition, who has crushed the

demon, Mahisha, wearing a charming knot of hair, Oh Daughter of Mountain (Himalaya), Victory to you, Victory to you. (5)

तत्रैव धूम्रलोचन-रक्तबीज-शुम्भनिशुम्भवधमाह -

अयि निजहुंकृतिमात्र-निराकृत-धूम्रविलोचन-धूम्रशते
समर-विशोषित-शोणितबीज़-समुद्भवशोणित-बीज-लते ।
शिव-शिव-शुम्भनिशुम्भमहाहव-तर्पित-भूतपिशाचपते
जय जय हे महिषासुरमर्दिनि रम्यकपर्दिनि शैलसुते ।।६।।

अयि निजेति । निजहुङ्कृतिमात्रेण निराकृतो धूम्रविलोचनश्च धूम्राणां धूम्रविलोचनानुयायिनां शतानि च यया सा तथा । "वृतः षष्ट्या सहस्राणामसुराणां द्रुतं ययौ" इति षष्टिसहस्राणि धूम्रलोचनस्यानुयायिनः। समरेति । समरे युद्धे विशोषितं रक्तबीजसमुद्भवं शोणितरूपं बीजं सहस्रशः शोणितासुरोत्पादनप्रयोजकं यया सा च सा लता च नारी चेति तथा । "लता नवा गन्धवहेन चुम्बिता " इति नैषधप्रयोगे नवा नवीना लता माधवीलता नवा रम्या लता नारी च इति टीकादर्शनाल्लतापदं नारीवाचकमपि । शिव शिवेति । शिव शिवेत्युच्चारणपूर्वकं शुम्भनिशुम्भयोर्महायुद्धे तर्पितो भूतपिशाचपतिः शङ्करो यया सा तथा । तथा चोक्तं -"ततःपरिवृतस्ताभिरीशानो

देवशक्तिभिः। हन्यन्ताम् असुराः शीघ्रं मम प्रीत्याह चण्डिकाम्" इति। यद् वा तस्मिन् महायुद्धे शत्रुवधोत्पन्नासृगादिभिः तर्पिता भूताः पिशाचाः तत्पतयश्च यया तथेति। जय जयेति। ॥६॥

*हे माता! इस के बाद तुम ने हुंकार मात्र से धूम्रलोचन और उस के अनुयायियों का वध कर डाला। युद्ध में रक्तबीज से उत्पन्न करोडों रक्तबीजों के बीज रक्तबिन्दुओं की धारा तुम ने सुखा डाला। फिर शुम्भ और निशुम्भ के साथ जो महा युद्ध हुआ उस में बहाये खून की धारा और मांस खण्डों से भूत पिशाचादि को शिव शिव कहते हुए मानो तर्पण ही किया। कैसा वह पराक्रम था। धन्य हो। जय हो महिषासुरमर्दिनी। जय हो जटाजूटधारिणी शैलपुत्री माता! ॥६॥*

Hail, Oh Goddess who has destroyed demon Dhoomralochana together with his hundreds of followers by the sheer utterance of sound "hum", Oh Female who has sucked up in battle the germ of blood emanating from demon Raktabija, who has satisfied the lord of goblins (Siva) by the war-cry "Siva-Siva", in the great battle with Sumbha and Nisumbha, who

has crushed the demon, Mahisha, wearing a charming knot of hair, Oh Daughter of Mountain (Himalaya), Victory to you, Victory to you. (6)

युद्धस्वरूपमाह -

धनुरनुसङ्गरण-क्षण-सङ्ग-परिस्फुरदङ्ग-नटत्कटके
कनक-पिशङ्ग-पृषत्क-निषङ्ग-रसद्भट-शृङ्ग-हतावटुके ।
कृत-चतुरङ्ग-बलक्षिति-रङ्ग-घटद्-बहुरङ्ग-रटद्-बटुके
जय जय हे महिषासुरमर्दिनि रम्यकपर्दिनि शैलसुते ।।७।।

धनुषो यदनुसंगरणं टङ्कारकरणं स एव क्षण उत्सवः "निर्व्यापारस्थितौ कालविशेषोत्सवयोः क्षणः" इत्यमरः। तत्सङ्गेन परिस्फुरत्सु प्रचलत्सु अङ्गेषु करादिषु नटन्ति प्रचलन्ति कटकानि यस्याः सा तथा । कनकेति । कनकपत्रकत्वात् कनकवत् पिशङ्गैः पृषत्कैर्बाणैः तादृशेन निषङ्गेण तूणीरेण च रसन्तः शब्दायमाना ये भटाः शत्रुसैनिकाः ते शृङ्गहतावटवो यया सा तथा । शृङ्गेण प्राधान्येन हता अवटवो ग्रीवोपरिदेशा ययेति विग्रहे कप् समासान्तः । "शृङ्गं प्राधान्यसान्वोश्च" इत्यमरः। आहिताग्न्यादेराकृतिगणत्वाद् शृङ्गहतावटवो यथोक्तभटा ययेति विग्रहे विशेषणस्य परनिपातः । शृङ्गमायुधविशेषो वा । माहेश्वर्या वर्णनं वा । तदीयवाहनेन वृषभेण

शृङ्गहता वटुत्वादसुराणाम्। कृतेति। स्वकृता दानवानां चतुरङ्गबलस्य क्षितिः क्षयो यत्र तादृशो यो रङ्गो रणभूमिः "रङ्गो ना रागे नृत्यरणक्षितौ " इति मेदिनी। तत्र निर्भयं घटन्तो घटमानाः चेष्टमाना बहुरङ्गं यथा स्यात् तथा रटन्तो बटुका यस्याः सा तथा। चतुरङ्गबलनाशे निर्भया बाला अपि भटानुकरणं कुर्वन्तो रटन्तश्चेष्टन्ते तथेति। घटधातोरात्मनेपदित्वात् परस्मैपदप्रयोगः "संज्ञापूर्वको विधिरनित्य" इत्याश्रित्य नेयः। यद् वा घटनं समुदायीभवनं घटः। घट इव आचरन्तो घटन्त एकत्रीभवन्त इति व्याख्येयम्। बहुरङ्गशब्दो वैविध्यार्थे भाषायां प्रयुज्यमान उपलभ्यते - 'बहुरङ्गी समाज' इत्यादौ। अथवा कृता चतुरङ्गबलक्षितिः यस्मिन् तत्र रङ्गे घटन्तो बहुरङ्गा नानारङ्गा रटन्तश्च बटुका बटुकभैरवबटुकविनायकादयो यस्याः सा तथेति विग्रहः। जय जयेति। ।।७।।

हे माता! युद्ध में तुम धनुषटंकार जब करने लगती तब समस्त अंग हिलने लगते थे तो उसके संग से कटककंकण नृत्य करने लगते थे। सुवर्णमय पीले बाणवाला तूणीर लिये कोलाहल करते हुए सामने आये शत्रुओं की गर्दनों को तुम तोडती जा रही थी। इस प्रकार जहाँ दानवों की चतुरंग सेना का विनाश हुआ वह रणभूमि ऐसी सुनसान हो गयी कि वहाँ बच्चे भी निर्भय होकर सैनिकों का अनुकरण करते हुए खेलने लगे थे। धन्य हो जय हो हे महिषासुरमर्दिनी जय हो

सुन्दर जटाजूट धारिणी शैलकुमारी ।।७।।

Oh Goddess, whose bangles are set in motion, because of the limb (hand) which throbs by its association with the joyous occasion of the twanging of bow, who mainly struck at the necks of soldiers, reverberating with quivers full of arrows which were tawny like gold, whose striplings were shouting in diversified manner on the battlefield where the destruction of the fourfold army was effected (by you), who has crushed the demon, Mahisha, wearing a charming knot of hair, Oh Daughter of Mountain (Himalaya), Victory to you, Victory to you. (7)

युद्धचरमावस्थामाह -

अयि शरणागत-वैरिवधू-वरवीरवराभय-दायिकरे
त्रिभुवन-मस्तकशूल-विरोधि-शिरोधि-कृताऽमल-शूल-करे ।
दुमिदुमितामरदुन्दुभि-नाद-महो-मुखरीकृत-दिङ्निकरे
जय जय हे महिषासुरमर्दिनि रम्यकपर्दिनि शैलसुते ।।८।।

अयि शरणागतेति । शरणागता ये वैरिणां वध्वो रक्षास्मत्पतिजीवनमिति याचमानास्तासां ये वरा वीराः तेभ्यो वरम् अभयं च प्रयच्छन्तौ करौ यस्याः सा तथा । एतद् वैपरीत्येन त्रिभुवनेति । त्रिभुवनस्य मस्तकशूलमिव ये विरोधिनः तेषां शिरोधौ कन्धरायां कृतः निक्षिप्तः अमलशूलः करे यस्याः सा तथा । दुमीति अव्यक्तानुकरणम् । दुमिदुमिता दुं दुं शब्दिता येऽमरदुन्दुभयो देवदुन्दुभयस्तेषां नादात्मकेन महसा उत्सवेन मुखरीकृताः प्रतिशब्देन शब्दायमाना दिङ्निकरा यया सा तथा । तिग्मकरे इति पाठे तस्मिन् महसि मुखरीकृता तिग्मतालवादनकरा यस्याः सा इति व्याख्येयम्। जय जयेति । ।।८।।

हे अम्बा ! उन वैरियों को भी तुम ने अपने वरद एवं अभय हाथों से वर एवं अभय दिया जिन की पत्नियाँ अपने पतियों की रक्षा के लिये तुम्हारी शरणागत हो गयी । इस के विपरीत जो त्रिभुवन के लिये सरदर्द बने हुए थे उन असुरों की गर्दनों में तुम ने अपने हस्तस्थ त्रिशूल को धँसाया । उस के बाद विजयी हो कर तुम ने जो विजय दुंदुभी बजायी उस की दुम दुम नादा से सारी दिशायें गूंज उठी । धन्य है तुम्हारी उदारता और युद्ध कुशलता । जय हो महिषासुरमर्दिनी माता! जय हो रम्य जटाजूट धारिणी शैलपुत्रीः ।।८।।

Hail, Oh Goddess whose palm offers blessings and fearlessness to the heroic husbands of wives of enemies who were seeking shelter (with you), in who is holding in her hand the hand the sparkling spear which is placed on the necks of oppondents who are the headache of the three worlds, who has rendered noisy the multitude of directions with the joy of drum-beats of gods making "dum, dum" sound, who has crushed the demon Mahisha, wearing a charming knot of hair, Oh Daughter of Mountain (Himalaya), Victory to you, Victory to you. (8)

नानासात्विकलीला आचष्टे -

सुरललना-ततथेयि- तथेयि-कृताभिनयोदर-नृत्य-रते
कृत-कुकुथःकुकुथो-गडदादिकताल-कुतूहल-गान-रते ।
धुधुकुट-धुक्कुट-धिन्धिमित-ध्वनि-धीर-मृदङ्ग-निनाद-रते
जय जय हे महिषासुरमर्दिनि रम्यकपर्दिनि शैलसुते ।।९।।

सुरललनेति। सुरललनाभिः सुराङ्गनाभिः ततथेयीत्याद्यनुकरणम्

ततथेयीत्याद्यनुकरणम् । इत्येवं कृताभिनयोदरे तादृशाभिनयमध्ये यन्नृत्यं तत्र रते । कृताभिनयोत्तरनृत्यरत इति पाठे तादृशाभिनयेऽभिनयाद् वा उत्तरं श्रेष्ठतरं यन्नृत्यं तत्र रत इति व्याख्येयम् । कृतः कुकुथः इत्यादिको यस्तालस्तत्र कुतूहलेन गाने रते । धुधुकुट इत्यादिना ध्वनिना धीरो गम्भीरो यो मृदङ्गनिनादस्तत्र रते । जय जयेति । ।।९।।

असुरवध होने पर हर्षित हुई देवाङ्गनाएँ तथेयी तथेयी कर के अभिनय के साथ नृत्य करने लगीं । कुकुथ कुकुथ गडद ताल के बीच गीत गाने लगीं । धुधुकुट धुक्कुट धिन्धिम ऐसें मृदंग बजने लगे । इन सब को देख कर सुन कर तुम आनन्दित होने लगी । धन्य हो माता जय हो महिषासुरमर्दिनी ! जय हो रम्य जटाजूट धारिणी शैलपुत्री ।।९।।

Oh, Goddess, who takes delight in the dance-sequence in the midst of acting done by divine women and accompanied by the sound "tatatheyi-tatheyi", who takes pleasure through curiosity in the singing to the accompaniment to rhythm (tala) expressed through "Kukuthah, Kukuthah, Gudada" etc., who

takes joy in the deep-sounding drum (mrdanga) resounding with "Dhudhukuta, Dhudhukuta, Dhindhumita", who has crushed the demon, Mahisha, wearing a charming knot of hair, Oh Daughter of Mountain (Himalaya), Victory to you, Victory to you. (9)

अर्धनारीश्वरीयनारीलीलां बहुतरपुरूषबहुतरनारीमिलितनृत्यलीलां (गरबा) वाऽऽदायाह -

जय- जय- जप्यजये जय- शब्द-पर-स्तुति-तत्पर-विश्व-नुते
झण- झण-झिञ्झिमि- झिङ्कृत-नूपुर- शिञ्जित-मोहित- भूतपते ।
नटित-नटार्ध-नटी-नट-नायक-नाटकनाटित-नाट्यरते
जय जय हे महिषासुरमर्दिनि रम्यकपर्दिनि शैलसुते ।।१०।।

जय जयेति । नृत्यादिसमये जय-जय-शब्देन जप्यो जयो यस्याः सा तथा । जय जय शब्दः पर उत्तमो यत्र तादृशस्तुतौ तत्परेण विश्वेन नुता तत्सम्बुद्धौ । झण झण झिञ्झिमीति झिंकृतस्य नूपुरस्य

शिञ्जितेनऽव्यक्तशब्देन मोहितो भूतपतिः शङ्करो यया सा तथा । नटितेति । आदिकर्मणि तिष्ठा । नटितौ समारब्धनटनौ, यौ नटार्धनटी च नटनायकश्च अर्धनारीश्वररूपौ ताभ्यां बहुतरनटबहुतरनटीसमुदायेन वा नाटिते प्रवर्तिते नाट्ये सुगानरते । जय जयेति । ॥१०॥

जय माता ! महिषासुरमर्दिनी ! जय हो रम्यकेशपाशधारिणी शैलपुत्री ! युद्ध में तुम्हारी विजय होने पर कुछ लोग जय-जय, जय-जय ऐसा मानो जप करने लगे थे । कुछ लोग जयकार के साथ स्तुति बोल रहे थे । इस प्रकार संपूर्ण विश्व तुम्हारी प्रशंसा-स्तुति करने में लगा था । और तुम भी आनन्दनृत्य में शामिल हो कर झण-झण झिम-झिम आवाज करते हुए नूपुर के झनकार से भूतपति शंकर को मोहित कर रही थी । फिर आधे नटों से और आधी नटियों से शोभित विशाल नाटक में शंकर के साथ स्वयं भी नृत्य करने लग गयी थी । अहा ! क्या उस समय की शोभा रही होगी ! धन्य हो ॥१०॥

Oh Goddess, who is praised by the World which is engrossed in a praise-song in which the word "jaya" occurs last, whose victory is fit to be muttered by (the words) "jaya", "jaya", who tempts Sankara, the Lord of

Creatures, by the jingling of her anklets, which make the sound "jhana, jhana, jhinjhimi, jhin", who takes delight in the lovely music sung in the drama acted by Siva in the form of half-female and half-male when he has started his dance, who has crushed the demon, Mahisha, wearing a charming knot of hair, Oh Daughter of Mountain (Himalaya), Victory to you, Victory to you. (10)

भ्रामरीरूपेण स्तौति -

अयि सुमनःसुमनःसुमनःसुमनःसुमनोहरकान्तियुते
श्रितरजनीरज-नीरज-नीरजनी-रजनीकर-वक्त्रयुते ।
सुनयनविभ्रम-रभ्र-मर-भ्रमर-भ्रम-रभ्रमराधिपते
जय जय हे महिषासुरमर्दिनि रम्यकपर्दिनि शैलसुते ।।११।।

अयि सुमन् इति । शोभनं मनो यस्याः तत्सम्बुद्धौ हे सुमनः। सुमनःसदृशानि पुष्पकोमलानि सुमनांसि शोभनमनांसि येषां तेषां सुमनसां देवानां विदुषां वा । "विद्वांसो वै देवा" इति श्रुतेः । सुमनोहरया अत्यन्तमनोज्ञया कान्त्या युते । पुनश्च श्रितेति । श्रितो

रजः परागो यया । अकारान्तो रज शब्दः। अथ च नीरजा निर्मला । यद् वा "रजनी नीलिनी रात्रिहरिद्राजतुकासु च" इति मेदिनीवचनात् श्रितोहरिद्रासदृशपीतरजोयया सा इति श्रितरजनीरजा। अपि च नीरजे निर्मले नीरे जले जनिः यस्याः सा कुमुदिनी तत्प्रबोधको रजनीकरो निशाकरः चन्द्रमा तत्सदृशेन वक्त्रेण युते । सुनयनेति । स्वीयसुन्दरनयनयोः विभ्रमैः रभ्रेण राभस्येन मरभ्रमरभ्रमं - मराणां मारकराणां भ्रमराणां भ्रमं राति उत्पादयतीति तथा । नेत्रविभ्रमणे भ्रमराः प्रसर्पन्तीति भ्रम उत्पद्यत इति भावः । एवंविधा या भ्रमराधिपतिर्भ्रामिरीदेवी तत्सम्बुद्धौ । जय जयेति । ॥११॥

रमणीय केशविन्यास से मनोहर हे शैलपुत्री ! हे महिषासुरमर्दिनी! माता जय हो । हे प्रसन्नमनसा (सुमनः) अम्बा ! पुष्प (सुमन) सदृश कोमल , शोभन मनवाले (सुमन) विद्धवान (सुमन) को आकर्षित करने वाली अति मनोहर (सुमन) कान्तिसे तुम शोभायमान हो । हल्दी के समान पीत पराग (रजनीरज) युक्त निर्मल (नीरज) पानी (नीर ) में उत्पन्न (ज) कुमुदिनी (नीरजनी) को खिलाने वाले चन्द्रमा (रजनीकर) के सदृश मुख से सुसुन्दर हो । अपने रमणीय नेत्रों के परिभ्रमण से भ्रमरों की भ्रान्ति लोगों में पैदा कर अपने भ्रमराधिपति भ्रामरीदेवी स्वरुप दिखाकर सचमुच भ्रमराधिपति बन जाती हो ॥११॥

Oh Goddess, having a cheerful disposition, who is possessed of very attractive lustre like gods whose minds are delicate like flowers, possessed of a face like the moon which causes the white lotus to bloom - the lotus which originates in the clear waters and who has resorted to the pollen that is yellow like termeric, who chastised the demon, Bhramara by the movements of beautiful eyes which cause the semblence of violent bees, who has crushed the demon, Mahisha, wearing a charming knot of hair, Oh Daughter of Mountain (Himalaya), Victory to you, Victory to you.(11)

ललितारूपेण स्तौति -

महित-महाहव-मल्लमतल्लिक-मल्लित-रल्लक-मल्ल-रते
विरचित-वल्लिक-पल्लिक-मल्लिक-झिल्लिक-भिल्लिक-वर्ग-वृते ।
सित-कृतफुल्ल-समुल्लसिताऽरुण-तल्लज-पल्लव-सल्ललिते
जय जय हे महिषासुरमर्दिनि रम्यकपर्दिनि शैलसुते ।।१२।।

महितेति । महितो महीकृतो महाहवो याभिः तादृश्यो मल्लमतल्लिका मल्लश्रेष्ठा यत्र । मतल्लिका मचर्चिकेत्यादयः प्रशस्तवाचकाः । एवंविधे मल्लिते युद्धे रल्लकं पक्ष्मकदम्बं भ्रुकुटिरेव मल्लः प्रतिमल्लः, भ्रुकुटिविक्षेपमात्रं प्रतिमल्लकर्मेति भावः । तत्र रते । विरचितेति । विचरिता वल्लिकैः वल्लिसमुदायैः पल्लिकाः कुटीराणि नीडानीति यावत् । यैः तेषां मल्लिकानाम् आलोहितचञ्चुचरणानां राजहंसानां झिल्लिका - आतपरोचिः पक्षप्रतिबिम्बित-धवल-सौरकिरण- प्रकाशो यत्र, एवंविधानां भिल्लिकानां लोध्रवृक्षाणां वर्गेण समुदायेन वनेन वृता तन्मध्यवर्तिनी पार्वतीरूपेत्यर्थः । तत्सम्बुद्धौ । वल्लिशब्दस्य स्त्रीलिङ्गत्वेऽपि वल्लिं कायन्तीति वा व्रीह्यादेराकृतिगणत्वेन हलन्तत्वाद् वा वल्लिकशब्दो वल्लीसमुदायार्थे सुयोजः । लोध्रवृक्ष- रक्षणार्थं पार्वत्या सिंहनियुक्ती रघुवंशे प्रसिद्धा । हंसाश्च अण्डप्रदानाय लोध्रवृक्षेषु नीडानि कुर्वन्ति । सितेति । सितौ ईषच्छवेतिमयुक्तौ च कृतफुल्लौ किञ्चिद्विकासितौ च तौ समुल्लसितौ चरणतल्लजौ च पदौ यौ तदीयलवेन विलासेन सल्ललिते - परमलालित्यवति । पद् - लव इत्यस्य सन्धौ पल्लवः । "लवः कालभिदिच्छिदि । विलासे रामजे लेशे तथा किञ्जल्कपक्ष्मणोः" इति अमरकोश-रामाश्रम्यामुद्धृत हैमपाठः । तदा पदकिञ्जल्कार्थोऽपि सुघटः । जय जयेति । ।।१२।।

जय हो माता महिषासुरमर्दिनी! जय हो रमणीय केशपाशधारिणी

शैलपुत्री ! महा घोर युद्ध में बडें बडें मल्ल (पहलवान) जहाँ युद्ध करते हैं वहाँ प्रतिमल्ल का कर्म तुम्हारा भ्रूकुटी चालन मात्र करता है। लताओं से घोंसले बनाकर उस पर पंख फैलाकर बैठे हुएं राजहंस अपने चमकीले पंखों पर पडी सूर्यकिरणों के प्रतिबिंब से लोध्रवृक्षों को सुशोभित कर रहे हैं, उन लोध्रवृक्षों के मध्य में बैठ कर तुम आनन्द लेती हो। लालिमा और सफेदी लिये हुए, खिले हुए विकसित कमल सदृश चरणों की शोभा से तुम अत्यन्त लालित्यपूर्ण होकर वास्तविक ललितादेवी हो रही हो। ।।१२।।

Oh Goddess, who is pleased with wrestlers in the form of eye-lashes which are made to play the role of wrestlers to encounter the choice wrestlers who have intensified the battle, who is surrounded by a cluster of Lodhra trees which have reflections of Sun's rays falling on the royal swans who have built nests of creepers thereon, who is graceful on account of the movements of feet which are reddish and brightened like blooming white flowers, who has crushed the demon Mahisha, wearing a

charming knot of hair, Oh Daughter of Mountain (Himalaya), Victory to you, Victory to you. (12)

उपास्यनानारूपेषु मातङ्गी-लक्ष्मी-कामेश्वरीरूपाणि आदाय आह

अविरल-गण्डगलन् -मद-मेदुर-मत्त-मतङ्गजराज-पते
त्रिभुवन-भूषणभूत-कलानिधिरूप-पयोनिधिराजसुते ।
अयि सुदतीजन-लालस-मानस-मोहन-मन्मथराज-सुते
जय जय हे महिषासुरमर्दिनि रम्यकपर्दिनि शैलसुते ।।१३।।

अविरलं सघनं निरन्तरं वा गण्डाद् गलता च्योतता मदवारिणा मेदुराः स्निग्धा ये मत्तमतङ्गज- राजाः तेषां पतिः स्वामिनी मातङ्गीत्यर्थः । तत्सम्बुद्धौ । क्वचिन्मत्तमतङ्गजराजगते इति पाठः । तदा एवंविधा ये मत्ता मतङ्गजाः तेषां राजा ऐरावतः तस्य गतिरिव गतिर्यस्याः सा तथा गजराजविराजितमन्दगतिरितिप्रसिद्धम् । त्रिभुवनेति । त्रिभुवने भूषणभूतो यः कलानिधिः चन्द्रमाः तस्य रूपमिव रूपं यस्याः सा च सा पयोनिधिराजस्य सुता क्षीरसागरकन्यका तत् सम्बुद्धौ । हे लक्ष्मीस्वरूपेत्यर्थः । अयीति । सुदतीजनेषु सुन्दरीषु लालसं मानसं येषां तेषां मोहनी च सा मन्मथराजसुता च कामराजेश्वरीत्यर्थः । षु

प्रसवैश्वर्ययोः । तत एव "पर्थिवे तनये सुतः" इत्यमरे पार्थिवार्थकत्वमुक्तम् । तेषां मोहनो यन्मन्मथराजः स सुतो यस्या इति वा विग्रहः । लक्ष्मीसुतो हि कामदेवः । जय जयेति । ।।१३।।

रमणीय घने वालों से मंजुलस्वरुप हे शैलपुत्री ! हे महिषासुरमर्दिनी ! तुम्हारी जय हो । निरन्तर गिरते हुए मदवारि से मनोहर, स्निग्ध मत्तगजों की स्वामिनी तुम मातंगी हो । तुम त्रिभुवन के भूषणरुप चन्द्रमा के समान रूप संपन्न लक्ष्मी हो । सुन्दर दन्त पंक्तियों से मुस्कराती हुई सुन्दरियों में जिन का मन लालस बना हुआ है उन उपासकों के सामने उनको मोहित करने वाली तुम जगन्मोहिनी साक्षात् कामेश्वरी हो ।।१३।।

Oh Goddess, ruling (as Matangi) over the best of intoxicated elephants rendered stucky with the profuse ichor trickling from their foreheads, who has got the beauty of moon as the ornament of the three worlds and who is the daughter of milky ocean, (as Lakshmi), hail Oh daughter of Cupid (as Kamarajesvari) who infatuates those whose minds are desirous of beautiful women, who has crushed the demon,

Mahisha, wearing a charming knot of hair, Oh Daughter of Mountain (Himalaya), Victory to you, Victory to you.(13)

श्रीदेवीस्वरूपमाह -

कमलदलामल-कोमल-कान्ति-कलाकलिताऽमल-भालतले
सकल-विलासकला-निलय-क्रम-केलि-चलत्-कलहंसकुले ।
अलिकुल-सङ्कुल-कुवलयमण्डल-मौलिमिलद्बकुलाऽऽलिकुले
जय जय हे महिषासुरमर्दिनि रम्यकपर्दिनि शैलसुते ॥१४॥

कमलेति । कमलदलवद् अमला कोमला कान्तिर्यस्य तत् किञ्च कलाकलितश्चन्द्रमाः तद्वदमलं भालतलं यस्याः सा तथा । पद्मानन्त्व-चन्द्रमुखत्वाभ्यां कमलदलकोमलत्वार्धचन्द्रावतारत्वाभ्यां वा । सकलेति । सकलानां सर्वासां विलासकलानां विलासशिल्पानां निलयभूतः निकेतनभूतः क्रमः पदविक्षेपो यत्र एवंविधायां केल्यां चलन्ति नृत्यन्ति कलहंसकुलानि यस्याः सा । "कलहंसस्तु कादम्बे राजहंसे नृपोत्तमे" इति मेदिनी । अलीति । अलिकुलेन भ्रमरकुलेन संकुलं व्यासं यत् कुवलयमण्डलं तद्युक्ते मौलौ मस्तके मिलन्ति बकुलानि बकुलपुष्पाणि यासां तासाम् आलीनां सखीनां कुलं यस्याः सा तथा । बकुलपुष्पं कामदेवप्रहित-पञ्चधाभूत-बाणद्वितीयांश-

सम्भवम् । जय जयेति । ।।१४।।

महिषासुरमर्दिनी हे महालक्ष्मी ! रम्य केशपाशावृत हे महाकाली हिमालय की पुत्री महासरस्वती हे उमा भगवती ! तुम्हारी जय हो । तुम्हारा ललाट कमलदल के समान कोमल कान्ति से युक्त है, चन्द्रमा के समान वक्राकार एवं निर्मल है । तुम्हारी नृत्य लीला में पाद विन्यास ऐसा है कि समस्त विलास शिल्पकला वहीं समायी हुई हैं जिसे देख कर कलहंस चंचल होकर स्वयं नृत्य करने लगते हैं । तुम ऐसी सहेलियों से घिरी हुई हो जिनके मस्तक में ऐसे कमल शोभा पा रहे हैं जहाँ भ्रमर भ्रमण करते रहते हैं और साथ में लगे हुए बकुल पुष्प सुगंधि फैलाते हैं ।।१४।।

Oh Goddess, having the spotless and delicate lustre of a lotus-petal (and) having the expance of forehead like clear moon, during whose sport consisting of foot-steps which are residence of all graceful arts the sweet-sounding swans are dancing, who is possessed of a group of rows of Bakula flowers which mingle with the crest of a bunch of blue lotuses full of swarms of bees, who has crushed the

demon, Mahisha, wearing a charming knot of hair, Oh Daughter of Mountain (Himalaya), Victory to you, Victory to you.(14)

शबरीस्वरूपमाह -

कर-मुरली-रव-वीजित-कूजित-लज्जित-कोकिल-मञ्जुरुते
मिलित-मिलिन्द-मनोहर-गुञ्जित-रञ्जित-शैलनिकुञ्ज-गते ।
निजगुणभूत-महाशबरीगण-सद्गुण-सम्भृत-केलितते
जय जय हे महिषासुरमर्दिनि रम्यकपर्दिनि शैलसुते ॥१५॥

करेति । करगतायाः मुरल्या रवेण वीजितं तिरस्कृतम्, ईज गतिकुत्सनयोरिति धातोर्विपूर्वस्य, कूजितं येषां ते अत एव लज्जिताः कोकिला यस्मिन्नेवंविधं मञ्जुरुतं यस्याः सा तथा । मञ्जुमते इति पाठे करमुरलीरवतिरस्कृतेन स्वकूजितेन लज्जिता कोकिलमञ्जुमतिः यया सा तथेति व्याख्येयम् । कोकिलस्य स्वविषये या मञ्जुत्वमतिर्लोकानां वा कोकिलविषये या मञ्जुत्वमतिः सा लज्जितेति । मिलितेति । मिलितानां मिलिन्दानां भ्रमराणां मनोहरेण गुञ्जितेन रञ्जिते शैलनिकुञ्जे गता स्थिता तत्सम्बुद्धौ । पुलिन्देति पाठे पुलिन्दरूपेणागतः शिवो ज्ञेयः । स्वमिलितेति च योज्यम् । पार्वतीपरमेश्वरौ पुलिन्दरूपेण मिलितौ मनोहरं जुगुञ्जतुरिति । निजेति । निजगुणभूतः स्वीयाङ्गभूतः

स्वीयसहायभूतो वा यो महाशबरीगणः महाशबरीरूपधारी सखीगण इत्यर्थः। तस्य सद्गुणेन संभृता केलिततिर्यस्याः सा । मिलिन्दपाठे तृतीयपादमेवं पेठुः । निजगणभूतवशाशबलाङ्गणरिङ्गणसंभृतकेलितते इति। निजगणभूता या वशाः स्त्रियः "वशास्त्रीकरणी च स्याद्" इत्यमरः। ताभिः शबलं चित्रितं यदङ्गणं तत्र रिङ्गणेन सञ्चरणेन संभृता केलिततिः यया सा तथेति। जय जयेति । ।।१५।।

महालक्ष्मी स्वरुप हे महिषासुरमर्दिनी ! महाकालीस्वरुप हे जटाजूट धारिणी ! महासरस्वतीस्वरुप हे शैलपुत्री ! जय हो जय हो। तुम कभी अपने हाथ में मुरली लेकर बजाने लगती हो तो उस की मंजुल आवाज से कोयल की आवाज भी अभिभूत हो जाती है। लज्जित हो जाती है । उसे बजाती हुई तुम पर्वतों में घने निकुंजो में पहुँच जाती हो । तब भ्रमरों का झुंड गुंजार करता हुआ वहाँ पहुँच जाता हैं और अपनी आवाज से उस मुरली स्वर को रंजित सुमधुर कर देता है। तब तुम वहाँ पर आयी हुई अपनी अन्तरंग महाशबरीरुप धारिणी शबरियों के गण के साथ अति सुन्दर केलि करती हो ।।१५।।

Oh Goddess, possessed of sweet sound of cuckoos who are ashamed as their notes are excelled by the sound of flute in your hand, residing in the bowers of mountain rendered

charming on account of the attractive humming of assemblage of bees, having a multitude of sports endowed with the excellent qualities of the group of great Sabari-s who are subordinate to yourself, who has crushed the demon, Mahisha, wearing a charming knot of hair, Oh Daughter of Mountain (Himalaya), Victory to you, Victory to you. (15)

अम्बिकाया मूकाम्बिकाया वा स्वरूपमाह -

कटितट-पीत-दुकूल-विचित्र-मयूख-तिरस्कृत-चन्द्ररुचे
प्रणत-सुरासुर-मौलि-मणिस्फुरदंशु-लसन्-नखचन्द्र-रुचे ।
जित-कनकाचलमौलि-मदोर्जित-निर्जरकुञ्जर-कुम्भ-कुचे
जय जय हे महिषासुरमर्दिनि रम्यकपर्दिनि शैलसुते ॥१६॥

कटितटस्थ पीतदुकूलस्य विचित्रमयूखैस्तिरस्कृता चन्द्ररुचिर्यया सा तथा । चण्डरुचिरिति पाठे चण्डरुचिः सूर्यः स तिरस्कृत इति । "रविकरगौरवराम्बरं दधाने" इति भागवते दर्शनात् । प्रणतेति । प्रणता ये सुराश्चासुराश्च तदीय मौलिमणीनां स्फुरदंशुभिर्लसन्ती नखचंन्द्ररुचिर्यस्याः सा तथा । जितेति । जितः

कनकाचलमौलिर्मेरुशिखरं याभ्यां तादृशौ मदोर्जितस्य निर्जर कुञ्जरस्यैरावतस्य कुम्भसदृशौ गण्डसदृशौ कुचौ यस्याः सा तथा । पाठान्तरे जितं कनकाचलस्य मौलिपदं शिखरस्थानं याभ्यां किं च उज्झितः प्रस्त्रावितो दुग्धसुनिर्झरो दुग्धप्रवाहो याभ्याम् एवंविधौ तुङ्गकुचौ यस्यास्तथा । जय जयेति । ।।१६।।

जय हो महिषासुर घातिनी ! जय हो मनोहर केशपाश धारिणी! जय जय शैलपुत्री ! तुम्हारे कटितट पर पहन रखा पीताम्बर ऐसा है कि उसकी चमक से चन्द्रमा की चांदनी भी फिकी पड जाती है। तुम्हारे चरणों में देव एवं असुर आकर प्रणाम करने लगते हैं तो उनके मस्तकों पर भूषण रुप से लगे हुए मणियों से निकलती चमकती रोशनी के पडने से अपनी चमक के साथ तुम्हारे चरणनख ऐसे दिखने लगते है जैसे कि दस चन्द्रमा एक साथ चमक रहे हों। हे माता ! साहित्य संगीतादि समग्र विद्यारुपी अमृतोपम दुग्ध से पूर्ण उन्नत उरुःस्थल में शोभित हो रहे तुम्हारे स्तन द्वय ने तो मानो कनकाचल सुमेरुपुर्वत के शिखरों को ही जीत लिया है, मानो मनमत्त ऐरावत हाथी के गण्डस्थल को परास्त कर लिया है ।।१६।।

Oh Goddess, having lustre which supersedes that of the moon because of the charing rays issuing from the yellow silk garment worn

around the waist, having the splendour of moon-like nails which shine with glittering rays coming from the crest-jewels of god and demons prostrating before you, having breasts which have surpassed the peaks of golden mountain (Meru) and resemble the temples of divine elephant (Airavata) grown strong with the ichor, who has crushed the demon, Mahisha, wearing a charming knot of hair, Oh Daughter of Mountain (Himalaya), Victory to you, Victory to you.(16)

चण्डीस्वरूपमाह -

विजित-सहस्रकरैक-सहस्रकरैक-सहस्रकरैकनुते
कृत-सुरतारक-सङ्गर-तारक सङ्गर-तारकसूनु-सुते ।
सुरथ-समाधि-समान-समाधि-समाधि-समाधि-सुजात-रते
जय जय हे महिषासुरमर्दिनि रम्यकपर्दिनि शैलसुते ।।१७।।

विजितेति । सहस्रकरः सूर्यो विजितः स्वतेजसा येन, स च असौ एकसहस्रकरः सहस्रार्जुनस्तेन स्वकीयैकसहस्रेण करैरेका मुख्या नुता

तत्सम्बुद्धौ । सहस्त्रार्जुनः दुर्वाससः श्रीविद्यां प्राप्य भगवतीम् आराधयामास इति प्रसिद्धम् । कृतेति । सुराश्च तारकासुरश्च तदीये परस्परसङ्गरे युद्धे तारकः विजयप्रापकः सङ्गरो युद्धं स कृतो येन स कार्तिकस्वामी तारकसूनुः शिवपुत्रः स एव सुतो यस्याः सा तथा। सुरथेति। सुरथो नाम राजा, समाधिः नाम वैश्यः, तयोः समानौ समन्तान्मोहात्मकावाधी, मानसव्यथे, तयोः समाधी समाधाने उपचारात्मके अपि मेधसा महर्षिणा सम्यगाधीयेते इति तत्र समाधौ सुजाता रतिः यस्याः सा तथा । जय जयेति । ।।१७।।

जय हो धनदायिनी महालक्ष्मी! जय हो शक्तिदायिनी महाकाली! जय हो विद्यादायिनी महासरस्वती! सहस्त्रकर (एक हजार हाथवाला) सहस्त्रार्जुन ऐसा था जिसने अपने तेज से सहस्त्रकर (सूर्य) को भी जीत लिया था । कैसे ? कहने की जरूअरत नहीं; उसने अपने एक सहस्त्र हाथों को जोड कर श्रीविद्यारूपी तुम्हारी स्तुति की थी । हे माता ! कार्तिकस्वामी ऐसे थे की जिन्होंने देवता और तारकासुर के युद्ध में पार करानेवाला निर्णायक युद्ध किया, अर्थात् तारकासुर का वध किया । वह भी कैसे ? शङ्करपुत्र, तारकासुर वधकारी कार्तिकस्वामी को जन्म देनेवाली तुम ही जो हुई । हे जगदम्बा ! सुरथ राजा और समाधि वैश्य दोनों की समान आधि (मोहव्यथा) इस का समाधान-उपचार तो मेधा ऋषि ने समाधि (भगवती के चरणों

का ध्यान समाधि आदि) बताया और वैसा करने पर उन को सफलता मिली । कैसे ? उस समाधि में तुम्हारी प्रसन्नता हुई और तुम ने इन दोनों को वरदान दिया । ।।१७।।

Oh Goddess, the only time praised by the thousand hands of Sahasrarjuna who had excelled the thousand-rayed Sun by his valour, having a son like Karttika who had fought a victorious battle in the clash between gods and Tarakasura, one for whom pleasure is created in the accomplishment (accorded by Sage Medhas) by giving justification for the self-same mental agony of (King) Suratha and (the Vaisya) Samadhi, who has crushed the demon. Mahisha, wearing a charming knot of hair, Oh Daughter of Mountain (Himalaya), Victory to you, Victory to you.(17)

स्तुतिपूजादि फलं प्रदर्शयन् स्तौति त्रिभिः - तत्र वरिवस्याफलं ब्रह्मभावमाह -

पदकमलं करुणानिलये वरिवस्यति योऽनुदिनं नु शिवे
अयि कमले कमलानिलये कमलानिलयः स कथं न भवेत् ।
तव पदमेव परम्पदमित्यनुशीलयतो मम किं न शिवे
जय जय हे महिषासुरमर्दिनि रम्यकपर्दिनि शैलसुते ।।१८।।

पदकमलमिति । अयि करुणानिलये शिवे हे कमले तव पदकमलं कमलानिलये लक्ष्मीमन्दिरे ससम्यन्तम् । अनुदिनं यो वरिवस्यति स कमलनिलयो लक्ष्मीगृहरूपः लक्ष्मीवान् इत्यर्थः । कथं न भवेत् । वरीवस्यत एवं फलं चेत् - सर्वतोभावेन स्वं समर्पयतः तव पदम् एव परं पदम् इत्यनुशीलयतः पुनर्मम किं न भवेत् । सर्वमप्यभीप्सितं भवेदेवेत्यर्थः । यद् वा कमलनिलये - वैकुण्ठे कमलानिलयः - विष्णुस्वरूपः कथं न भवेदिति योजना । जय जयेति । ।।१८।।

महिषासुरमर्दिनी रमणीय केशपाशधारिणी हिमालयनन्दिनी हे माता ! तुम्हारी जय हो । दयासागर हे जननी ! तुम्हारे चरणकमलों की पूजा प्रतिदिन जो करता है वह सर्व समृद्धि सम्पन्न होता है ऐसी प्रसिद्धि है । क्यों न हो ? क्योंकि तुम स्वयं कमलालय लक्ष्मी हो । फिर तुम्हारे चरणों को ही सब कुछ मान कर निरन्तर अनुचिन्तन करने वाले मेरे लिये क्या बात हो सकती है ? अवश्य मैं भी तुम्हारा कृपापात्र हो कर अभीष्ट प्रास करूँगा । ।।१८।।

Hail, Oh Kamala, the store-house of compassion, Oh Siva, how will he not become a residence of Lakshmi (i.e. rich) when he offers service to you in the temple of Lakshmi ? Oh Siva, what will I not achieve by the constant devoted service thinking that your feet is the highest position ? Oh Goddess, who has crushed the demon, Mahisha, wearing a charming knot of hair, Oh Daughter of Mountain (Himalaya), Victory to you, Victory to you. (18)

वरिवस्याऽसमर्थानाम् अभिषेकफलम् ऐन्द्रपदसुखम् अज्ञानाम् आह -

कनकलसत्कल-सिन्धुजलैरनुषिञ्चति ते गुणरङ्गभुवं
भजति स किं न शचीकुचकुम्भ-तटीपरिरम्भ-सुखानुभवम् ।
तवचरणं शरणं करवाणि नतामरवाणि निवासि शिवं
जय जय हे महिषासुरमर्दिनि रम्यकपर्दिनि शैलसुते ॥१९॥

कनकेति । कनकेन नागकेसरेण । "कनकं हेम्नि पुंसि स्यात् किंशुके नागकेसरे" इति मेदिनी । लसन्ती कला अंशा येषां तैः -

नागकेसरयुक्तैरित्यर्थः। सिन्धुजलैः नदीजलैः ते गुणरङ्गभुवं गुणानां नानादिव्यगुणानां रङ्गभुवं नृत्यस्थानं विग्रहमिति यावत् । योऽनुसिञ्चति स शच्या इन्द्राण्याः कुचकुम्भतटीसमाश्लेषसुखानुभवंन भजेत् किम् ? इन्द्रपदवीं लब्ध्वा अवश्यं भजेद् एव इत्यर्थः । हे नतामरवाणि - नता अमरा यस्यै सा च सा वाणी च सरस्वतीरूपिणीत्यर्थः।तव चरणं शरणं करवाणि । निवासि - नितरां वस्ते आच्छादयति ब्रह्मस्वरूपं सा निवासी मायारूपिणीत्यर्थः । तत् सम्बुद्धौ । यद् वा - नतानाममराणां वाणौ सन्ताने निवसतीति - नतामरणवाणिनिवासि । वाणिर्व्यूतिः स्त्रियौ तुल्ये इत्यमरः । वेञो रूपं वाणिरिति। वाणिरम्बुदे भूतौ शून्ये मूल्ये सरस्वत्यामिति हैमः। नतामराणां वाणौ वाण्यां निवसति इति वा । हे नतामरवाणिं शिवे! तव चरणं शरणं करवाणि । "तव चरणं शरणं करवाणि मृडानि सदा मयि धेहि शिवम् " इति च पाठः । स सुगमः । जय जयेति । ।।१९।।

*अधर्मरूपी महिषासुर को मिटानेवाली हे माता ! व्योम केश पाश युक्त हे अम्बा ! क्षमाधर महिधर की पुत्री विशालमानस हे देवि ! जय हो तुम्हारी । नागकेसर से सुवासित पवित्र नदीजल से तुम्हारे गुणाधिष्ठान मूर्ति का प्रतिदिन जो अभिषेक कर पूजा करता है वह इन्द्राणीसदृश उन्नतस्तनी कान्ता आलिङ्गन सुख का अर्थात् संसार सुख*

क्यों नहीं पा सकेगा ? अवश्य पा सकेगा । मैं तो प्रतिमा को क्या आप के साक्षात् चरण को ही शरण बना लूँगा जो परम मङ्गल मोक्षस्वरूप है जहाँ समस्त देववाणी वेदवाणी समर्पित है अर्थात् जिस का प्रतिपादन करती है । ।।१९।।

One who sprinkles the stage meant for (the dance of) your divine qualities with waters of rivers in which bits of shining Nagakesara have been mixed, will he not share the happy experience of embracing the sides of pitcher-like breasts of Indrani ? Oh Siva who conceals (the nature of Brahman), who are Speech Divine and to whom gods bow down, I resort to your feet, Oh goddess, who has crushed the demon, Mahisha, wearing a charming knot of hair, Oh Daughter of Mountain (Himalaya), Victory to you, Victory to you. (19)

यथोचिताभिषेकाशक्तानां स्मरणमात्रं कदाचित् कुर्वतां पामराणामपि स्वर्गफलप्राप्तिमाह -

तव-विमलेऽन्दुकलं वदनेन्दुमलं सकलं ननु कूलयते
किमु पुरुहूतपुरीन्दुमुखी-सुमुखीभिरसौ विमुखीक्रियते ।
मम तु मतं शिवनामधने भवतीकृपया किमुत क्रियते
जय जय हे महिषासुरमर्दिनि रम्यकपर्दिनि शैलसुते ।।२०।।

तवेति । हे विमले तव अन्दुकं बन्धनं लातीत्यन्दुकलम् स्वस्वरुपबन्धनकरं वदनेन्दुं मुखचन्द्रमसं सकलं कलासहितं यः खलु कूलयते दुःखनदीकूलं करोति । कलयन्ननुकूलयते इति पाठान्तरम्। तत्र तादृशं मुखचन्द्रं कलयन् चिन्तयन्ननुकूलयते त्वामिति शेषः। असौ पुरुहूतपुर्या इन्द्रपुर्याः इन्दुमुखीभिरिहापि सुमुखीभिश्च विमुखीक्रियते किम् ? निषिध्य परावर्त्यते किम् ? नैव । भगवतीकृपामात्रमपेक्षमाणस्यसर्वमपि भवतीत्याह - हे शिवनामधने शिवनामैव धनं यस्याः सा तथा । "यद् द्व्यक्षरं नाम" इत्यादि भागवते। किं पुनः वक्तव्यं मम तु मतमभीष्टं भवतीकृपया - भवत्याः कृपया क्रियते सम्पाद्यत इति। जय जयेति ।।२०।।

रमणीय केशपाश विभूषित हे शैलपुत्री ! महिषासुरमर्दनकारिणी हे माता ! तुम्हारी जय हो । हे अम्बा ! तुम्हारा मुखचन्द्र षोडश कलापूर्ण है । अपनी ओर सब को आकृष्ट कर आबद्ध करने वाला है । उसी मुख चन्द्रमा को ही दुःखनदी का पार किनारा स्वीकार

कर अवलम्बन करता है अर्थात् चिन्तन करता है उसको इन्द्रपुरी की चन्द्रमुखी सुमुखी अप्सराएँ भी क्या विमुख करेंगी ? नहीं, स्वयं उसके अधीन बनेंगी । ऐसी स्थिति में हे माता ! तुम्हारे चरणों को शरण स्वीकार करने वाले मेरे अभीष्ट अवश्य सिद्‌ध होगा इस विषय में कहना ही क्या ? ।।२०।।

Oh Pure One, the person who looks upon your moonlike face together with its digits causing a bond (with your essence) as the bank (beyond which the river of sorrow does not proceed) - will he ever be turned away by the ladies of Indra's City, having moonlike faces and auspicious faces ? Oh Goddess, having the name of Siva as her treasure, or my opinion is that with kindness you achieve it. Oh Goddess, who has crushed the demon, Mahisha, wearing a beatiful know of hair, Oh Daughter of Mountain (Himalaya), Victory to you, Victory to you. (20)

प्रार्थनामाह -

अयि मयि दीनदयालुतया करुणापरया भवितव्यमुमे
अयि जगतो जननी कृपयासि यथासि तथाऽनुमितासि रमे ।
यदुचितमत्र भवत्युररीकुरुतादुरुतापमपाकुरु मे
जय जय हे महिषासुरमर्दिनि रम्यकपर्दिनि शैलसुते ।।२१।।

अयि मयीति । अयि मयि दीनदयालुतया करुणापरया भवितव्यमुमे इति पठितव्यम् । कृपयैव त्वयेति पाठे छन्दोभङ्गात् । अयि उमे दीनदयालुतया हेतुना । मयि करुणापरया भवितव्यं त्वयेति पाठे तवेत्यर्थे तृतीया स्यात् । दीने दयालुता यस्याः तथा त्वयेति वा क्लेशेन योज्यम् । दीनदयाल्वा त्वया भवितव्यम् अयि मातः त्वं कृपयैव जगतो जननी असि । न तु परवशा सती । ननु बाधितो हेतुः । न । यथाऽसि तथैवानुमितासि । रते इति सम्बोधनम् । रते भक्ते मयि यदुचितमिति परेणान्वयो वा । रमे इति पाठान्तरं तु सुगमम्। अत्र अस्मिन् संसारे यदुचितं मत्कृते तदुररीकुरुताद् भवतीत्याशासे। उरुतापम् अपाकुरुतात् । अपाकुरु ते इति पाठश्चिन्त्यः । अपाकुरु मे इति पाठान्तरं सुगमम् । तस्य यदुचितमित्यनेन उरुतापमित्यनेन च सम्बन्धः । जय जयेति । ।।२१।।

*हे माता ! तुम दीनदयालु हो, मुझ पर करुणा करो । हे जगज्जननी ! हे जगत्पालनकारिणी अम्बा ! तुम्हारी कृपा से जैसे*

तुम हो वैसे ही अनुमान से मैं ने समझा है, जो मेरे लिये उचित है, उसे ही अपना कर भारी भवताप से मुझे उबारो । जय हो हे महिषासुरमर्दिनी! जय हो रमणीय जटजूटधारणी! जय हो शैलपुत्री! जय हो अम्बामाता ! सदा तुम्हारी जय हो । ।।२१।।

Hail, Oh Uma, you should be compassionate to the afflicted and kind. Hail Oh Rama, with your kndness you are the mother of the universe. You have been conjunctured (to be such) as you are. Oh Revered One, adopt that which is fit for me. Remove my extensive sorrow. Oh Goddess, who has crushed the demon, Mahisha, wearing a beautiful knot of hair, Oh Daughter of Mountain (Himalaya), Victory to you, Victory to you.(21)

इति श्रीजयमङ्गलाचार्य (श्रीमहामण्डलेश्वरकाशिकानन्दयति) स्वामिना विरचिता महिषासुरमर्दिनीस्तोत्रव्याख्या ।।

अस्याः पुस्तिकायाः मुद्रणं राष्ट्रीय-सॉफ्टवेयर-प्रौद्योगिकी-केन्द्रम्
(गुल्मोहर-क्रास-मार्ग सं. ९, जुहू, बम्बई - ४०००४९)
इति संस्थया प्रदत्तायाः 'विविधा' प्रक्रियासामग्र्याः सहाय्येन कृतम्।
तस्याम् उपयोगित्तानाम् अक्षरमातृकारूपाणां विकसनेन तेषाम् अस्मभ्यम्
उपपादनेन च राष्ट्रीय-सॉफ्टवेयर-प्रौद्योगिकी-केन्द्रम् इति संस्थायाः डॉ.
एस. पी. मुदुर-महाभागेन सुरेशः के-महाभागेन च उपकृताः वयम् इति
अगाधां कृतज्ञतां प्रबलं गुणग्राहकत्वं च प्रकटयामः।

डॉ. अ. सदानन्दन्,
उपाध्यक्षः, भारती-संस्कृत-विद्या-निकेतनम्

This Book has been published with the help of the Computer Software 'VIVIDHA' supplied by National Centre for Software Technology, Gulmohar Cross Road No.9, Juhu, Bombay 400049.

Our indebtedness and high appreciation are due to Dr. S.P. Mudur and Shri Suresh K. of NCST (National Centre for Software Technology) who helped us by developing & supplying different types of fonts used in this publication.

Dr. A. Sadanandan, Vice-President, B.S.V.N.

भारती-संस्कृत-विद्या-निकेतनस्य ग्रन्थमालायाः
प्रथमं पुष्पम्

# महिषासुरमर्दिनी-स्तोत्रम्
# MAHISHASURAMARDINI-STOTRAM

व्याख्याता :-
द्वादशदर्शनिकाननकेसरी आचार्यः स्वामी काशिकानन्दगिरिजी
महाराजः, महामण्डलेश्वरः
Commentator :-
Dvadashadarshanakananakesari Acharya Swami
Kashikanandagiriji Maharaj, Mahamandleswar.

आँग्लभाषानुवादकर्त्री :-
डॉ. उषा भिसे.
Translation into English by :-
Dr. Usha Bhise,

भारती-संस्कृत-विद्या-निकेतनम्
Bharati-Samskrta-Vidya-Niketanam

भारती-संस्कृत-विद्या-निकेतनस्य ग्रन्थमालायाः
प्रथमं पुष्पम्

# महिषासुरमर्दिनी-स्तोत्रम्

# MAHISHASURAMARDINI-STOTRAM

व्याख्याता :-
द्वादशदर्शनिकाननकेसरी आचार्यः स्वामी काशिकानन्दगिरिजी
महाराजः, महामण्डलेश्वरः
Commentator :-
Dvadashadarshanakananakesari Acharya Swami
Kashikanandagiriji Maharaj, Mahamandleswar.
आँग्लभाषानुवादकर्त्री :-
डॉ. उषा भिसे.
Translation into English by :-
Dr. Usha Bhise,

भारती-संस्कृत-विद्या-निकेतनम्
Bharati-Samskrta-Vidya-Niketanam